# अद्वैतानुभूतिः

https://sa.wikisource.org/s/1s77

।।श्रीः।।

।।अद्वैतानुभूतिः।।

अहमानन्दसत्यादिलक्षणः केवलः शिवः।

सदानन्दादिरूपं यत्तेनाहमचलोऽद्वयः।। 1.1।।

अक्षिदोषाद्यथैकोऽपि द्वयवद्भाति चन्द्रमाः।

एकोऽप्यात्मा तथा भाति द्वयवन्मायया मृषा।। 1.2।।

अक्षिदोषविहीनानामेक एव यथा शशी।

मायादोषविहीनानामात्मैवैकस्तथा सदा।। 1.3।।

द्वित्वं भात्यक्षिदोषेण चन्द्रे स्वे मायया जगत्।

द्वित्वं मृषा यथा चन्द्रे मृषा द्वैतं तथात्मनि।। 1.4।।

आत्मनः कार्यमाकाशो विनात्मानं न संभवेत्।

कार्यस्य पूर्णता सिद्धा किं पुनः पूर्णतात्मनः।। 1.5।।

कार्यभूतो यथाकाश एक एव न हि द्विधा।

हेतुभूतस्तथात्मायमेक एव विजानतः।। 1.6।।

एकोऽपि द्वयवद्भाति यथाकाश उपाधितः।

एकोऽपि द्वयवत्पूर्णस्तथात्मायमुपाधितः।। 1.7।।

कारणोपाधिचैतन्यं कार्यसंस्थाच्चितोऽधिकम्।

न घटाभ्रान्मृदाकाशः कुत्रचिन्नाधिको भवेत्।। 1.8।।

निर्गतोपाधिराकाश एक एव यथा भवेत्।

एक एव तथात्मायं निर्गतोपाधिकः सदा।। 1.9।।

आकाशादन्य आकाश आकाशस्य यथा न हि।

एकत्वादात्मनो नान्य आत्मा सिध्यति चात्मनः।। 1.10।।

मेघयोगाद्यथा नीरं करकाकारतामियात्।

मायायोगात्तथैवात्मा प्रपञ्चाकारतामियात्।। 1.11।।

वर्षोपल इवाभाति नीरमेवाभ्रयोगतः।

वर्षोपलविनाशेन नीरनाशो यथा न हि।। 1.12।।

आत्मैवायं तथा भाति मायायोगात्प्रपञ्चवत्।

प्रपञ्चस्य विनाशेन स्वात्मनाशो न हि क्वचित्।। 1.13।।

जलादन्य इवाभाति जलोत्थो बुद्बुदो यथा।

तथात्मनः पृथगिव प्रपञ्चोऽयमनेकधा।। 1.14।।

यथा बुद्बुदनाशेन जलनाशो न कर्हिचित्।

तथा प्रपञ्चनाशेन नाशः स्यादात्मनो न हि।। 1.15।।

अहिनिल्वयनीजातः शुच्यादिर्नाहिमाप्नुयात्।

तथा स्थूलादिसंभूतः शुच्यादिर्नाप्नुयादिमम्।। 1.16।।

त्यक्तां त्वचमहिर्यद्वदात्मत्वेन न मन्यते।

आत्मत्वेन सदा ज्ञानी त्यक्तदेहत्रयं तथा।। 1.17।।

अहिनिल्वयनीनाशादहेर्नाशो यथा न हि।

देहत्रयविनाशेन नात्मनाशस्तथा भवेत्।। 1.18।।

तक्रादिलवणोपेतमज्ञैर्लवणवद्यथा।

आत्मा स्थूलादिसंयुक्तो दूष्यते स्थूलकादिवत्।। 1.19।।

अयःकाष्ठादिकं यद्वद्वह्निवद्वह्नियोगतः।

भाति स्थूलादिकं सर्वमात्मवत्स्वात्मयोगतः।। 1.20।।

दाहको नैव दाह्यं स्याद्दाह्यं तद्वन्न दाहकः।

नैवात्मायमनात्मा स्यादनात्मायं न चात्मकः।। 1.21।।

प्रमेयादित्रयं सार्धं भानुना घटकुड¬वत्।

येन भाति स एवाहं प्रमेयादिविलक्षणः।। 1.22।।

भानुस्फुरणतो यद्वत्स्फुरतीव घटादिकम्।

स्फुरतीव प्रमेयादिरात्मस्फुरणतस्तथा।। 1.23।।

पिष्टादिगुलसंपर्काद्गुलवत्प्रीतिमान्यथा।

आत्मयोगात्प्रमेयादिरात्मवत्प्रीतिमान्भवेत्।। 1.24।।

घटनीरान्नपिष्टानामुष्णत्वं वह्नियोगतः।

वॉंह्न विना कथं तेषामुष्णता स्याद्यथा क्वचित्।। 1.25।।

भूतभौतिकदेहानां स्फूर्तिता स्वात्मयोगतः।

विनात्मानं कथं तेषां स्फूर्तिता स्यात्तथा क्वचित्।। 1.26।।

नानाविधेषु कुम्भेषु वसत्येकं नभो यथा।

नानाविधेषु देहेषु तद्वदेको वसाम्यहम्।। 1.27।।

नानाविधत्वं कुम्भानां न यात्येव यथा नभः।

नानाविधत्वं देहानां तद्वदेव नयाम्यहम्।। 1.28।।

यथा घटेषु नष्टेषु घटाकाशो न नश्यति।

तथा देहेषु नष्टेषु नैव नश्यामि सर्वगः।। 1.29।।

उत्तमादीनि पुष्पाणि वर्तन्ते सूत्रके यथा।

उत्तमाद्यास्तथा देहा वर्तन्ते मयि सर्वदा।। 1.30।।

यथा न संस्पृशेत्सूत्रं पुष्पाणामुत्तमादिता।

तथा नैकं सर्वगं मां देहानामुत्तमादिता।। 1.31।।

पुष्पेषु तेषु नष्टेषु यद्वत्सूत्रं न नश्यति।

तथा देहेषु नष्टेषु नैव नश्याम्यहं सदा।। 1.32।।

पर्यङ्करज्जुरन्ध्रेषु नानेवैकापि सूर्यभा।

एकोऽप्यनेकवद्भाति तथा क्षेत्रेषु सर्वगः।। 1.33।।

रज्जुरन्ध्रस्थदोषादि सूर्यभां न स्पृशेद्यथा।

तथा क्षेत्रस्थदोषादि सर्वगं मां न संस्पृशेत्।। 1.34।।

तद्रज्जुरन्ध्रनाशेषु नैव नश्यति सूर्यभा।

तथा क्षेत्रविनाशेषु नैव नश्यामि सर्वगः।। 1.35।।

देहो नाहं प्रदृश्यत्वाद्भौतिकत्वान्न चेन्द्रियम्।

प्राणो नाहमनेकत्वान्मनो नाहं चलत्वतः।। 1.36।।

बुद्धिर्नाहं विकारित्वात्तमो नाहं जडत्वतः।

देहेन्द्रियादिकं नाहं विनाशित्वाद्धटादिवत्।। 1.37।।

देहेन्द्रियप्राणमनोबुद्ध्यज्ञानानि भासयन्।

अहंकारं तथा भामि चैतेषामभिमानिनम्।। 1.38।।

सर्वं जगदिदं नाहं विषयत्वादिदंधियः।

अहं नाहं सुषुप्त्यादौ अहमः साक्षितः सदा।। 1.39।।

सुप्तौ यथा निर्विकारस्तथावस्थाद्वयेऽपि च।

द्वयोर्मात्राभियोगेन विकारीव विभाम्यहम्।। 1.40।।

उपाधिनीलरक्ताद्यैः स्फटिको नैव लिप्यते।

तथात्मा कोशजैः सर्वैः कामाद्यैर्नैव लिप्यते।। 1.41।।

फालेन भ्राम्यमाणेन भ्रमतीव यथा मही।

अगोऽप्यात्मा विमूढेन चलतीव प्रदृश्यते।। 1.42।।

देहत्रयमिदं नित्यमात्मत्वेनाभिमन्यते।

यावत्तावदयं मूढो नानायोनिषु जायते।। 1.43।।

निद्रादेहजदुःखादि जाग्रद्देहं न संस्पृशेत्।

जाग्रद्देहजदुःखादिस्तथात्मानं न संस्पृशेत्।। 1.44।।

जाग्रद्देहवदाभाति निद्रादेहस्तु निद्रया।

निद्रादेहविनाशेन जाग्रद्देहो न नश्यति।। 1.45।।

तथायमात्मवद्भाति जाग्रद्देहस्तु जागरात्।

जाग्रद्देहविनाशेन नात्मा नश्यति कर्हिचित्।। 1.46।।

हित्वायं स्वाप्निकं देहं जाग्रद्देहमपेक्षते।

जाग्रद्देहप्रबुद्धोऽयं हित्वात्मानं यथा तथा।। 1.47।।

स्वप्नभोगे यथैवेच्छा प्रबुद्धस्य न विद्यते।

असत्स्वर्गादिके भोगे नैवेच्छा ज्ञानिनस्तथा।। 1.48।।

भोक्त्रा बहिर्यथा भोग्यः सर्पो दृषदि कल्पितः।

रूपशीलादयश्चात्मभोगा भोग्यस्वरूपकाः।। 1.49।।

ज्ञस्य नास्त्येव संसारो यद्वदज्ञस्य कर्मिणः।

जानतो नैव भीर्यद्वद्रज्जुसर्पमजानतः।। 1.50।।

सैन्धवस्य घनो यद्वज्जलयोगाज्जलं भवेत्।

स्वात्मयोगात्तथा बुद्धिरात्मैव ब्राह्मवेदिनः।। 1.51।।

तोयाश्रयेषु सर्वेषु भानुरेकोऽप्यनेकवत्।

एकोऽप्यात्मा तथा भाति सर्वक्षेत्रेष्वनेकवत्।। 1.52।।

भानोरन्य इवाभाति जलभानुर्जले यथा।

आत्मनोऽन्य इवाभासो भाति बुद्धौ तथात्मनः।। 1.53।।

बिम्बं विना यथा नीरे प्रतिबिम्बो भवेत्कथम्।

विनात्मानं तथा बुद्धौ चिदाभासो भवेत्कथम्।। 1.54।।

प्रतिबिम्बचलत्वाद्या यथा बिम्बस्य कर्हिचित्।

न भवेयुस्तथाभासकर्तृत्वाद्यास्तु नात्मनः।। 1.55।।

जले शैत्यादिकं यद्वज्जलभानुं न संस्पृशेत्।

बुद्धेः कर्मादिकं तद्वच्चिदाभासं न संस्पृशेत्।। 1.56।।

बुद्धेः कर्तृत्वभोक्तृत्वदुःखित्वाद्यैस्तु संयुतः।

चिदाभासो विकारीव शरावस्थाम्बुभानुवत्।। 1.57।।

शरावस्थोदके नष्टे तत्स्थो भानुर्विनष्टवत्।

बुद्धेर्लये तथा सुप्तौ नष्टवत्प्रतिभात्ययम्।। 1.58।।

जलस्थार्कं जलं चोर्मिं भासयन्भाति भास्करः।

आत्माभासं धियं बुद्धेः कर्तृत्वादीनयं तथा।। 1.59।।

मेघावभासको भानुर्मेघच्छन्नोऽवभासते।

मोहावभासकस्तद्वन्मोहच्छन्नो विभात्ययम्।। 1.60।।

भास्यं मेघादिकं भानुर्भासयन्प्रतिभासते।

तथा स्थूलादिकं भास्यं भासयन्प्रतिभात्ययम्।। 1.61।।

सर्वप्रकाशको भानुः प्रकाश्येर्नैव दूष्यते।

सर्वप्रकाशको ह्यात्मा सर्वैस्तद्वन्न दूष्यते।। 1.62।।

मुकुरस्थं मुखं यद्वन्मुखवत्प्रथते मृषा।

बुद्धिस्थाभासकस्तद्वदात्मवत्प्रथते मृषा।। 1.63।।

मुकुरस्थस्य नाशेन मुखनाशो भवेत्कथम्।

बुद्धिस्थाभासनाशेन नाशो नैवात्मनः क्वचित्।। 1.64।।

ताम्रकल्पितदेवादिस्ताम्रादन्य इव स्फुरेत्।

प्रतिभास्यादिरूपेण तथात्मोत्थमिदं जगत्।। 1.65।।

ईशजीवात्मवद्भाति यथैकमपि ताम्रकम्।

एकोऽप्यात्मा तथैवायमीशजीवादिवन्मृषा।। 1.66।।

यथेश्वरादिनाशेन ताम्रनाशो न विद्यते।

तथेश्वरादिनाशेन नाशो नैवात्मनः सदा।। 1.67।।

अध्यस्तो रज्जुसर्पोऽयं सत्यवद्रज्जुसत्तया।

तथा जगदिदं भाति सत्यवत्स्वात्मसत्तया।। 1.68।।

अध्यस्ताहेरभावेन रज्जुरेवावशिष्यते।

तथा जगदभावेन सदात्मैवावशिष्यते।। 1.69।।

स्फटिके रक्तता यद्वदुपाधेर्नीलताम्बरे।

यथा जगदिदं भाति तथा सत्यमिवाद्वये।। 1.70।।

स्फटिके रक्तता मिथ्या मृषा खे नीलता यथा।

तथा जगदिदं मिथ्या एकस्मिन्नद्वये मयि।। 1.71।।

जीवेश्वरादिभावेन भेदं पश्यति मूढधीः।

निर्भेदे निर्विशेषेऽस्मिन्कथं भेदो भवेद्ध्रुवम्।। 1.72।।

लिङ्गस्य धारणादेव शिवोऽयं जीवतां व्रजेत्।

लिङ्गनाशे शिवस्यास्य जीवतावेशता कुतः।। 1.73।।

शिव एव सदा जीवो जीव एव सदा शिवः।

वेत्त्यैक्यमनयोर्यस्तु स आत्मज्ञो न चेतरः।। 1.74।।

क्षीरयोगाद्यथा नीरं क्षीरवद्दृश्यते मृषा।

आत्मयोगादनात्मायमात्मवद्दृश्यते तथा।। 1.75।।

नीरात्क्षीरं पृथक्कृत्य हंसो भवति नान्यथा।

स्थूलादेः स्वं पृथक्कृत्य मुक्तो भवति नान्यथा।। 1.76।।

क्षीरनीरविवेकज्ञो हंस एव न चेतरः।

आत्मानत्मविवेकज्ञो यतिरेव न चेतरः।। 1.77।।

अध्यस्तचोरजः स्थाणोर्विकारः स्यान्न हि क्वचित्।

नात्मनो निर्विकारस्य विकारो विश्वजस्तथा।। 1.78।।

ज्ञाते स्थाणौ कुतश्चोरश्चोराभावे भयं कुतः।

ज्ञाते स्वस्मिन्कुतो विश्वं विश्वाभावे कुतोऽखिलम्।। 1.79।।

गुणवृत्तित्रयं भाति परस्परविलक्षणम्।

सत्यात्मलक्षणे यस्मिन्स एवाहं निरंशकः।। 1.80।।

देहत्रयमिदं भाति यस्मिन्ब्राह्मणि सत्यवत्।

तदेवाहं परं ब्राह्म देहत्रयविलक्षणः।। 1.81।।

जाग्रदादित्रयं यस्मिन्प्रत्यगात्मनि सत्यवत्।

स एवाहं परं ब्राह्म जाग्रदादिविलक्षणः।। 1.82।।

विश्वादिकत्रयं यस्मिन्परमात्मनि सत्यवत्।

स एव परमात्माहं विश्वादिकविलक्षणः।। 1.83।।

विराडादित्रयं भाति यस्मिन्साक्षिणि सत्यवत्।

स एव सच्चिदानन्दलक्षणोऽहं स्वयंप्रभः।। 1.84।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य

श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य

श्रीमच्छंकरभगवतः कृतौ

अद्वैतानुभूतिः संपूर्णा।।